॥ श्रीवेङ्कटेश्वरनवरत्नमालिकास्तुतिः ॥

श्रीमानम्भोधिकन्याविहरणभवनीभूतवक्षःप्रदेशः
भास्वद्भोगीन्द्रभूमीधरवरशिखरप्रान्तकेलीरसज्ञः ।
शश्वद्ब्रह्मेन्द्रवह्निप्रमुखसुरवराराध्यमानाङ्घ्रिपद्मः
पायान्मां वेङ्कटेशः प्रणतजनमनःकामनाकल्पशाखी ॥ १॥

यस्मिन् विश्वं समस्तं चरमचरमिदं दृश्यते वृद्धिमेति
भ्रश्यत्यन्ते च तादृग्विभवविलसितस्सोऽयमानन्दमूर्तिः ।
पद्मावासामुखाम्भोरुहमद धु मधुविद्विभ्रमोन्निद्रचेताः
शश्वद्भूयाद्विनम्राखिलमुनिनिवहो भूयसे श्रेयसे मे ॥ २॥

वन्दे देवं महान्तं दरहसितलसद्वक्त्रचन्द्राभिरामं
नव्योन्निद्रावदाताम्बुजरुचिरविशालेक्षणद्वन्द्वरम्यम् ।
राजन्मार्ताण्डतेजःप्रसितशुभमहाकौस्तुभोद्भास्युरस्कं
शान्तं श्रीशङ्खचक्राद्यमलकरयुतं भव्यपीताम्बराढ्यम् ॥ ३॥

पायाद्विश्वस्य साक्षी प्रभुरखिलजगत्कारणं शाश्वतोऽयं
पादप्रह्वाघराशिप्रशमननिभृताम्भोधरप्राभवो माम् ।
ब्यक्ताव्यक्तस्वरूपो दुरधिगमपदः प्राक्तनीनां च वाचां
ध्येयो योगीन्द्रचेतस्सरसिजनियतानन्ददीक्षाविहारः ॥ ४॥

आद्यं तेजोविशेषैरुपगतदशदिङ्मण्डलाभ्यन्तरालं
सूक्ष्मं सूक्ष्मातिरिक्तं भवभयहरणं दिव्यभव्यस्वरूपम् ।
लक्ष्मीकान्तं खगेन्द्रध्वजमघशमनं कामितार्थैकहेतुं
वन्दे गोविन्दमिन्दीवरनवजलदश्यामलं चारुहासम् ॥ ५॥

राकाचन्द्रोपमास्यं ललितकुवलयश्याममम्भोजनेत्रं
ध्यायाम्याजानुबाहुं हलनलिनगदाशार्ङ्गरेखाञ्चिताङ्घ्रिम् ।
कारुण्याञ्चत्कटाक्षं कलशजलधिजापीनवक्षोजकोशा-
श्लेषावाताङ्गरागोच्छयललितनवाङ्कोरुवक्षस्स्थलाढ्यम् ॥ ६॥

श्रीमन्संपूर्णशीतद्युतिहसनमुखं रम्यबिम्बाधरोष्ठं
ग्रीवाप्रालम्बिवक्षस्स्थलसततनटद्वैजयन्तीविलासम् ।
आदर्शौपम्यगण्डप्रतिफलितलसत्कुण्डलश्रोत्रयुग्मं
स्तौमि त्वां द्योतमानोत्तममणिरुचिरानल्पकोटीरकान्तम् ॥ ७॥

सप्रेमौत्सुक्यलक्ष्मीदरहसितमुखाम्भोरुहामोदलुभ्यन्-

मत्तद्वैरेफविक्रीडितनिजहृदयो देवदेवो मुकुन्दः ।
स्वस्ति श्रीवत्सवक्षाः श्रितजनशुभदः शाश्वतं मे विदध्यात्
न्यस्तप्रत्यग्रकस्तूर्यनुपमतिलकप्रोल्लसत्फालभागः ॥ ८॥

श्रीमान् शेषाद्रिनाथो मुनिजनहृदयाम्भोजसद्राजहंसः ।
सेवासक्तामरेन्द्रप्रमुखसुरकिरीटर्चितात्माङ्घ्रिपीठः ।
लोकस्यालोकमात्राद्विहरति रचयन् यो दिवारात्रलीलां
सोऽयं मां वेङ्कटेशप्रभुरधिककृपावारिधिः पातु शश्वत् ॥ ९॥

श्रीशेषशर्माभिनवोपक्लृप्ता
प्रियेण भक्त्या च समर्पितेयम् ।
श्रीवेङ्कटेशप्रभुकण्ठभूषा
विराजतां श्रीनवरत्नमाला ॥ १०० ।
॥ इति श्रीवेङ्कटेश्वरनवरत्नमालिकास्तुतिः समाप्ता॥